उ॰ णस्तस्य यत्किञ्चेह करोत्ययं । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्म्मण इति नु कामयमानोऽथा-

भा॰ तत्कर्म्म कृतवान् । तस्मात्तन्मनोऽभिषङ्गवशादेवास्य तेन कर्म्मणा तत्फलप्राप्तिः। तेनैतत्सिद्धं भवति कामो मूलं संसारस्येति। अत उत्पन्नकामस्य विद्यमानान्यपि कर्म्माणि ब्रह्मविदो बन्ध्यप्रसवानि भवन्ति। पर्य्याप्तकामस्य कृतात्मनस्त्विहैव सर्व्वे प्रलीयन्ति कामा इति श्रुतेः । किञ्च प्राप्यान्तं कर्म्मणः प्राप्य भुक्ताऽन्तमवसानं यावत्कर्म्मणः फलं। परिसमाप्तिं कृत्वेत्यर्थः । कस्य कर्म्मणोऽन्तं प्राप्येत्युच्यते। तस्य यत्किञ्चन कर्म्म इहास्मिँल्लोके करोति निर्व्वर्त्तयत्ययं तस्य कर्म्मणः फलं भुक्तान्तं प्राप्य तस्माल्लोकात्पुनरैत्यागच्छत्यस्मै लोकाय कर्म्मणोऽयं हि लोकः कर्म्मप्रधानस्तेनाह कर्म्मण इति। पुनः कर्म्मकरणाय पुनः कर्म्म कृत्वा फलसङ्गवशात्पुनरमुं लोकं यातीत्येवं। इति नु एवं नु कामयमानः संसरति यस्मात्

आ॰ पादयति तदभिलाषो हीति॥ पूर्व्वार्द्धार्थमुपसंहरति । तेनेति॥ कामस्य संसारमूलत्वे सत्यर्थसिद्धमर्थमाह । अत इति॥ बन्ध्यप्रसवत्वं निष्फलत्वं । पर्य्याप्तकामस्य प्राप्तपरमपुरुषार्थस्येति यावत् । कृतात्मनः शुद्धबुद्धेर्विदिततत्त्वस्येत्यर्थः। इहेति जीवदवस्थोक्तिः । कामप्रधानः संसरति चेत्कर्म्मफलभोगानन्तरं कामाभावान्मुक्तिः स्यादित्याशङ्क्याह। किञ्चेति॥ इतश्च संसारस्य कामप्रधानत्वमास्थेयमित्यर्थः। यावदवसानं तावद्भुक्तेति सम्बन्धः॥ उक्तमेव सङ्क्षिपति। कर्म्मण इति॥ इत्येवं पारम्पर्य्येण संसरणाद्दृते ज्ञानान्न मुक्तिरिति शेषः॥ संसारप्रकरणमुपसंहरति । इति न्विति॥ अवस्थाद्वयस्य दार्ष्टान्तिकं बन्धं प्रबन्धेन दर्शयित्वा

## NOTICE.

---

An English translation of the Upanishad and Commentary will be given in one or two separate numbers, after the completion of the Text